॥ गरूडध्वजस्तोत्रम् अथवा ध्रुवकृता भगवत्स्तुतिः ॥

ध्रुव उवाच
योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
  संजीयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादीन्-
  प्राणान्नमो भगवते पुरूषाय तुभ्यम् ॥ १॥

एकस्त्वमेव भगवन्निदमात्मशक्त्या
  मायाख्ययोरूगुणया महदाद्यशेषम् ।
सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु
  नानेव दारूषु विभावसुवद्विभासि ॥ २॥

त्वद्दत्तया वयुनयेदमचष्ट विश्वं
  सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः ।
तस्यापवर्ग्यशरणं तव पादमूलं
  विस्मर्यते कृतविदा कथमार्तबन्धो ॥ ३॥

नूनं विमुष्टमतयस्तव मायया ते
  ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चन्ति कल्पकतरूं कुणपोपभोग्य-
  मिच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम् ॥ ४॥

या निर्वृतिस्तनुभूतां तव पादपद्म-
  ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
  किन्त्वन्तकासिलुलितात् पततां विमानात् ॥ ५॥

भक्तिं मूहुः प्रवहतां त्वयि मे प्रसङ्गो
  भूयादनन्त महताममलाशयानाम् ।
येनाञ्जसोल्बणमुरूव्यसनं भवाब्धिं
  नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ६॥

ते न स्मरन्त्यतितरां प्रियमीशमर्त्यं
  ये चान्वदः सुतसुहृद्गृहवित्तदाराः ।
ये त्वब्जनाभ भवदीयपदारविन्द-
  सौगंध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ ७॥

तिर्यङ्नगद्विजसरीसृपदेवदैत्य-
मर्त्यादिभिः परिचितं सदसद्विशेषम् ।
रूपम् स्थविष्ठमज ते महदाद्यनेकं
नातःपरं परम वेद्मि न यत्र वादः ॥ ८॥

कल्पान्त एतदखिलं जठरेण गृह्णन्
शेते पुमान् स्वदृगनन्तसखस्तदङ्के ।
यन्नाभिसिन्धुरूहकाञ्चनलोकपद्म-
गर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ ९॥

त्वं नित्यमुक्तपरिशुद्धविशुद्ध आत्मा
कूटस्थ आदिपुरूषो भगवांस्त्र्यधीशः ।
यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या
द्रष्टा स्थितावधिमखो व्यातिरिक्त आस्से ॥ १०॥

यस्मिन् विरूद्धगतयो ह्यनिशं पतन्ति
विद्यादयो विविधशक्तय आनुपूर्व्यात् ।
तद्ब्रह्म विश्वभवमेकमनन्तमाद्यम-
अनन्दमात्रमविकारमहं प्रपद्ये ॥ ११॥

सत्याशिषो हि भगवंस्तव पादपद्म-
माशीस्तथाऽनुभजतः पुरुषार्थमूर्तेः ।
अप्येवमार्य भगवान् परिपाति दीनान्
वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १२॥

मैत्रेय उवाच
अथाभिष्टुत एवं वै सत्सङ्कल्पेन धीमता ।
भृत्यानुरक्तो भगवान् प्रतिनन्द्येदमब्रवीत् ॥ १३॥

श्रीभगवानुवाच
वेदाहं ते व्यवसितं हृदि राजन्यबालक ।
तत्प्रयच्छामि भद्रं ते दुरापमपि सुव्रत ॥ १४॥

नान्यैरधिष्ठितं भद्र यद्भ्राजिष्णु ध्रुवक्षिति ।
यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥ १५॥

मेढ्यां गोचक्रवत्स्थास्नु परस्तात् कल्पवासिनाम् ।
धर्मोऽग्निः कश्यपः शुक्रो मुनयो ये वनौकसः ॥

चरन्ति दक्षिणोकृत्य भ्रमन्तो यत्सतारकाः ॥ १६॥

प्रस्थिते तु वनं पित्रा दत्त्वा गां धर्मसंश्रयः ।
षत्त्रिंशद्वर्षसाहस्रं रक्षिताऽव्याहतेन्द्रियः ॥ १७॥

त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः ।
अन्वेषन्ती वनं माता दावाग्निं सा प्रवेक्ष्यति ॥ १८॥

इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः ।
भुक्त्वा चेहाशिषः सत्या अन्ते मां संस्मरिष्यसि ॥ १९॥

ततो गंतासि मत्स्थानं सर्वलोकनमस्कृतम् ।
उपरिष्ठादृषिभ्यस्त्वं यतो नावर्तते गतः ॥ २०॥

मैत्रेय उवाच
इत्यर्चितः स भगवानतिदिश्यात्मनः पदम् ।
बालस्य पश्यतो धाम स्वमगाद्गरुडध्वजः ॥ २१॥

। इति श्रीगरुडध्वजस्तोत्रं सम्पूर्णम् ।